# आपस्तम्ब शुल्ब सूत्र

विहारयोगान्व्याख्यास्यामः १ यावदायामं प्रमाणम् तदर्धमभ्यस्याप-
रस्मिंस्तृतीये षड्भागोने लक्षणं करोति । पृष्ठ्यान्तयोरन्तौ नियम्य
लक्षणेन दक्षिणापायम्य निमित्तं करोति । एवमुत्तरतो विपर्यस्येतरतः
। स समाधिः । तन्निमित्तो निर्हासो विवृद्धिर्वा २ आयामं वाभ्य-
स्यागन्तुचतुर्थमायामस्याक्ष्णयारज्जुः तिर्यङ्मानीशेषः । व्याख्यातं वि-
हरणम् ३ दीर्घस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते
कुरुतस्तदुभयं करोति । ताभिर्ज्ञेयाभिरुक्तं विहरणम् ४ चतुरश्रस्या-
क्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति । समस्य द्विकरणी ५ प्रमाणं तृती-
येन वर्धयेत्तच्च चतुर्थेनात्मचतुस्त्रिंशोनेन सविशेषः ६ अथापरम् ।
प्रमाणमात्रीं रज्जुमुभयतः पाशां करोति । मध्ये लक्षणमर्धमध्ययोश्च
पृष्ठ्यायां रज्जुमायम्य पाशयोर्लक्षणेष्विति शङ्कून्निहत्योपान्त्ययोः पाशौ
प्रतिमुच्य मध्यमेन लक्षणेन दक्षिणापायम्य निमित्तं करोति । मध्यमे
पाशौ प्रतिमुच्य उपर्युपरि निमित्तं मध्यमेन लक्षणेन दक्षिणापायम्य शङ्कुं
निहन्ति । तस्मिन्पाशं प्रतिमुच्य पूर्वस्मिन्नितरं मध्यमेन लक्षणेन
दक्षिणमंसमायच्छेत् । उन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य मध्यमेनैव
लक्षणेन दक्षिणां श्रोणीमायच्छेत् । एवमुत्तरौ श्रोण्यंसौ ७ १

अथापरोयोगः । पृष्ठ्यान्तयोर्मध्ये च शङ्कून्निहत्यार्धे तद्विशेषमभ्यस्य
लक्षणं कृत्वार्धमागमयेत् । अन्तयोः पाशौ कृत्वा मध्यमे सविशेषं
परतिमुच्य पूर्वस्मिन्नितरं लक्षणेन दक्षिणमंसमायच्छेत् । उन्मुच्य पूर्व-
स्मादपरस्मिन्प्रतिमुच्य लक्षणेनैव दक्षिणां श्रोणीमायच्छेत् । एवमुत्तरौ
श्रोण्यंसौ १ प्रमाणं तिर्यग्द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी
२ तृतीयकरण्येतेन व्याख्यात । विभागस्तु नवधा ३ तुल्ययोश्चतुर-
श्रयोरुक्तस्समासः । नाना प्रमाणयोश्चतुरश्रयोस्समासः । ह्रसीयसः
करण्या वर्षीयसो वृध्रमुल्लिखेत् । वृध्रस्याक्ष्णयारज्जुरुभे समस्यति
। तदुक्तम् ४ चतुरश्राच्चतुरश्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तस्य करण्या

वर्षीयसो वृध्रमुल्लिखेत् । वृध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसंहरेत् । सा यत्र निपतेत्तदपच्छिन्द्यात् । छिन्नया निरस्तम् ५ उपसंहृता अक्ष्णयारज्जुस्सा चतुष्करणी छिन्ना चेतरा च यत्पृथग्भूते कुरुतः तदुभयं करोति । तिर्यङ्मानी पुरुषं शेषस्त्रीन् । तदुक्तम् ६ दीर्घचतुरश्रं समचतुरश्रं चिकीर्षन्तिर्यङ्मान्या अपच्छिद्य शेषं विभज्योभयत उपदध्यात् । खण्डमागन्तुना संपूरयेत् । तस्य निर्हार उक्तः ७ २

समचतुरश्रं दीर्घचतुरश्रं चिकीर्षन्यावच्चिकीर्षेत्तावतीं पार्श्वमानीं कृत्वा यदधिकं स्यात्तद्यथा योगमुपदध्यात् १ चतुरश्रं मण्डलं चिकीर्षन्मध्यात्कोत्यां निपातयेत् । पार्श्वतः परिकृष्यातिशयतृतीयेन सह मण्डलं परिलिखेत् । सा नित्या मण्डलम् । यावद्धीयते तावदागन्तु २ मण्डलं चतुरश्रं चिकीर्षन् विष्कम्भं पञ्चदशभागान्कृत्वा द्वावुद्धरेत् । त्रयोदशावशिष्यन्ते । सानित्या चतुरश्रम् ३ प्रमाणेन प्रमाणं विधीयते ४ चतुरश्रमादेशादन्यत् ५ द्वाभ्यां चत्वारि । त्रिभिर्नव ६ यावत्प्रमाणा रज्जुस्तावतस्तावतो वर्गान् करोति तथोपलब्धिः ७ अध्यर्धपुरुषा रज्जुर्द्वौ सपादौ करोति । अर्धतृतीयपुरुषा षट् सपादान् ८ अथात्यन्त प्रदेशः । यावता यावताऽधिकेन परिलिखति तत्पार्श्वयोरुपदधाति । यच्च तेन चतुरश्रं कृयते तत्कोटच्याम् ९ अर्धप्रमाणेन पादप्रमाणं विधीयते । अर्धस्य द्विप्रमाणायाः पादपूरणत्वात् । तृतीयेन नवमी कला १० ३

अग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्तराले विज्ञायते । अष्टासु प्रक्रमेषु ब्राहमणोऽग्निमादधीत । एकादशसु राजन्यः । द्वादशसु वैश्यः १ चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते २ दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेर्विज्ञायते ३ गार्हपत्याहवनीययोरन्तरालं पञ्चधा षड्धा वा संविभज्य षष्ठं सप्तमं वा भागमागन्तुमुपसमस्य समं त्रैधं विभज्यापरस्मिंस्तृतीये लक्षणं कृत्वा गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य निमित्तं

करोति । तद्दक्षिणाग्नेरायतनम् । श्रुतिसामर्थ्यात् ४ यजमानमात्री प्राच्यपरिमिता वा यथासन्नानि हवींषि संभवेदेवं तिरश्चीप्राञ्चौ वेद्यंसावुन्नयति । प्रतीची श्रोणी । पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये संनततरैवमिव हि योषेति दार्शिक्या वेदेर्विज्ञायते ५ अपरेणाहवनीयं यजमानमात्रं दीर्घचतुरश्रं विहृत्य तावतीं रज्जुमभ्यस्य मध्ये लक्षणं कृत्वा दक्षिणयोः श्रोण्यंसयोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य निमित्तं करोति । निमित्ते रज्जुं नियम्यान्तौ समस्येत् । दक्षिणायाः श्रोणेर्दक्षिणमंसमालिखेत् । एवमुत्तरतः तिर्यङ्मानीं द्विगुणां तथा कृत्वा पश्चात्पुरस्ताच्चोपलिखेत् । विमितायां पुरस्तात् पार्श्वमान्या उपसंहरेत् । श्रुतिसामर्थ्यात् ६ ४

त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्चीति सौमिक्या वेदेर्विज्ञायते १ षट्त्रिंशिकायामष्टादशोपसमस्य अपरस्मादन्ताद्द्वादशसु लक्षणं पञ्चदशसु लक्षणं पृष्ठ्यान्तयोरन्तौ नियम्य पञ्चदशिकेन दक्षिणापायम्य शङ्कुं निहन्त्येवमुत्तरतस्ते श्रोणी । विपर्यस्यांसौ पञ्चदशिके नैवापायम्य द्वादशिके शङ्कुं निहन्ति । एवमुत्तरतस्तावंसौ । तदेकरज्ज्वा विहरणम् २ त्रिकचतुष्कयोः पञ्चिकाऽक्ष्णयारज्जुः । ताभिस्त्रिरभ्यस्ताभिरंसौ । चतुरभ्यस्ताभिः श्रोणी ३ द्वादशिकपञ्चिकयोस्त्रयोदशिकाऽक्ष्णयारज्जुः ताभिरंसौ द्विरभ्यस्ताभिः श्रोणी ४ पञ्चदशिकाष्टिकयोः सप्तदशिकाऽक्ष्णयारज्जुः ताभिः श्रोणी । द्वादशिकपञ्चत्रिंशिकयोस्सप्तत्रिंशिकाऽक्ष्णयारज्जुः ताभिरंसौ ५ एतावन्ति ज्ञेयानि वेदिविहरणानि भवन्ति ६ अष्टाविंशत्यूनं पदसहस्रं महावेदिः । दक्षिणस्मादंसाद्द्वादशसु दक्षिणस्यां श्रोण्यां निपातयेत् । छेदं विपर्यस्येतरत उपदध्यात् । सा दीर्घचतुरश्रा । तथा युक्तां संचक्षीत ७ सौमिक्या वेदितृतीये यजेतेति सौत्रामण्या वेदेर्विज्ञायते । प्रक्रमस्य तृतीयकरणीप्रक्रमस्थानीया भवति । त्रिकरण्या वा अष्टिक दशिके तिर्यङ्मान्यौ द्वादसिका पृष्ठ्या । त्रीणि चतुर्विंशानि पदशतानि सौत्रामणिकी वेदिः ८ ५

द्विस्तावा वेदिर्भवतीत्यश्वमेधे विज्ञायते । प्रक्रमस्य द्विकरणी प्रक्रमस्थानीया भवति १ प्रक्रमो द्विपदस्त्रिपदो वा । प्रक्रमे यथाकामी शब्दार्थस्य विशयित्वात् । यजमानस्याध्वर्योर्वा । एष हि चेष्टानां कर्ता भवति २ रथमात्री निरुढपशुबन्धस्य वेदिर्भतीति विज्ञायते । तत्र खल्वाहूरथाक्षमात्री पश्चात्तिर्यगीषया प्राची । विपथयुगेन पुरस्तात् । यावता वा बाह्ये छिद्रे ३ तदेकरज्ज्वोक्तम् । पञ्चदशिकेनैवापायम्यार्धाक्षेणार्धयुगेनेति श्रोणयंसान्निर्हरेत् ४ अथाप्युदाहरन्ति । अष्टाशीतिशतमीषा तिर्यगक्षश्चतुश्शतं षडशीतिर्युगं चास्य स रथश्चारण उच्यते । इति रथपरिमाणम् ५ अरत्निभिर्वा चतुर्भिः पश्चात् षड्भिः प्राची त्रिभिः पुरस्तात् । तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्य द्वाभ्यामध्यर्धेनेति श्रोणयंसान्निर्हरेत् ६ यजमानमात्री चतुःस्रक्तिर्भवतीति पैतृक्या वेदेर्विज्ञायते । तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धेन ततश्श्रोणयंसान्निर्हरेत् ७ दशपदोत्तर वेदिर्भवतीति सोमे विज्ञायते । तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धेन ततश्श्रोणयंसान्निर्हरेत् ८ तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते ९ पदे युगेऽरत्नावियति शम्यायां च मानार्थेषु यथाकामी शब्दार्थस्य विशयित्वात् १० विमितायां पुरस्तात्पार्श्वमान्या वुपसंहरेत् । श्रुतिसामर्थ्यात् ११ ६

नवारत्नि तिर्यक्सप्तविंशतिरुदगायतमिति सदसो विज्ञायते । अष्टादशेत्येकेषाम् । तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धपञ्चमैः श्रोणयंसान्निर्हरेत् १ प्रादेशमुखाः प्रादेशान्तराला भवन्तीत्युपरवाणां विज्ञायते । अरत्निमात्रं चतुरश्रं विहृत्य स्रक्तिषु शङ्कून्निहत्यार्धप्रादेशेन तं परिलिखेत् श्रुतिसामर्थ्यात् २ व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते । चतुरश्रेत्येकेषाम् । परिमण्डलेत्येकेषाम् ३ करणं व्यायामस्य तृतीयायामं सप्तमव्यासं कारयेत् । ता एकविंशतिर्भवन्ति । प्रागायमः प्रथमे प्रस्तारेऽपरस्मिन्नुदगायामाः ४ मण्डलायां मृदो देहं कृत्वा मध्ये शङ्कुं निहत्यार्धव्यायामेन सह मण्डलं परिलिखेत् । तस्मि-

न्श्चतुरश्रमवदध्याद्यावत्संभवेत्तन्नवधा व्यवलिख्य त्रैधमेकैकं प्रधिकं विभजेत् ५ उपधाने चतुरश्रस्यावान्तरदेशान्प्रति स्रक्तीस्संपादयेत् । मध्यानीतरस्मिन्प्रस्तारे । व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् ६ पिशीलमात्रा भवन्तीति धिष्ण्यानां विज्ञायते । चतुरश्रा इत्येकेषाम् । परिमण्डला इत्येकेषाम् ७ मृदो देहान्कृत्वा आग्नीध्रीयं नवधा व्यवलिख्य एकस्यास्स्थानेऽश्मानमुपदध्यात् । यथासंख्यमितरा-न्व्यवलिख्य यथायोगमुपदध्यात् ८ ७

भवतीव खलु वा एष योऽग्निं चिनुत इति विज्ञायते । वयसां वा एष प्रतिमया चीयत इत्याकृतिचोदना प्रत्यक्षविधानाद्वा १ यावदाम्नातेन वेणुना चतुर आत्मनि पुरुषानवमिमीते । पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरे । अरत्निना दक्षिणतो दक्षिणं पक्षं वर्धयति । एवमुत्तरत उत्तरम् । प्रादेशेन वितस्त्या वा पश्चात् पुच्छम् २ एकविधः प्रथमो-ऽग्निर्द्विविधः द्वितीयस्त्रिविधस्तृतीयः । त एवमेव आद्यन्त्यैकशत-विधात् ३ तदु ह वै सप्तविधमेव चिन्वीत । सप्तविधो वाव प्रकृ-तोऽग्निः । तत ऊर्ध्वमेकोत्तरानिति विज्ञायते ४ एकविधप्रभृतीनां न पक्षपुच्छानि भवन्ति । सप्तविधवाक्यशेषत्वाच्छ्रुतिविप्रतिषेधाच्च ५ अष्टविधप्रभृतीनां यदन्यत्सप्तभ्यस्तत्सप्तधा विभज्य प्रतिपुरुषमा-वेशयेत् । आकृतिविकारस्याश्रुतत्वात् ६ पुरुषमात्रेण विमिमीते वेणुना विमिमीते इति विज्ञायते ७ ८

यावान्यजमान ऊर्ध्वबाहुस्तावदन्तराले वेनोश्छिद्रे करोति मध्ये तृतीयम् । अपरेण यूपावटदेशमनुपृष्ठ्यं वेणुं निधाय छिद्रेषु शङ्कून्निहत्य उन्मुच्यापराभ्यां दक्षिणाप्राक्परिलिखेदन्तात् । उन्मुच्य पूर्वस्मादपर-स्मिन् प्रतिमुच्य दक्षिणा प्रत्यक्परिलिखेदन्तात् । उन्मुच्य वेणुं मध्यमे शङ्कावन्त्यं वेणोश्छिद्रं प्रतिमुच्योपर्युपरिलेखासमरं दक्षिणा वेणुं निधायान्त्ये छिद्रे शङ्कुं निहत्य तस्मिन्मध्यमं वेणोश्छिद्रं प्रतिमुच्य लेखान्तयोरितरे प्रतिष्ठाप्य छिद्रयोश्शङ्कू निहन्ति । स पुरुषश्चतुरश्रः १

एवं प्रदक्षिणं चतुर आत्मनि पुरुषानवमिमीते । पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरे । अरत्निना दक्षिणतो दक्षिणमित्युक्तम् २ पृष्ठ्यातो वा पुरुषमात्रस्याक्ष्णया वेणुं निधाय पूर्वस्मिन्नितरम् । ताभ्यां दक्षिणं अंसं निर्हरेत् । विपर्यस्य श्रोणी । पूर्ववदुत्तरमंसम् ३ रज्ज्वा वा विमायोत्तरवेदिन्यायेन वेणुना विमिमीते ४ सपक्षपुच्छेषु विधाभ्यासेऽपचये च विधासप्तमकरणीं पुरुषस्थानीयां कृत्वा विहरेत् ५ करणानीष्टकानां पुरुषस्य पञ्चमेन कारयेत् । तासामेवैकतोऽध्यर्धास्तद्द्वितीयम् । परुषस्य पञ्चमो भाग एकतः प्रादेश एकतः तत्तृतीयम् । सर्वतः प्रादेशस्तच्चतुर्थम् । समचतुरश्राः पञ्चदशभागीयास्तत्पञ्चमम् ६ ऊर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेदर्धेन नाकसदां पञ्चचोडानां च ७ यत्पच्यमानानां प्रतिह्रसेत पुरीषेण तत्संपूरयेदनियतपरिमाणत्वात् पुरीषस्य ८ ९

उपधानेऽध्यर्धा दश पुरस्तात् प्रतीचीरात्मन्युपदधाति । दश पश्चात्प्राचीः । पञ्च पञ्च पक्षाग्रयोः । पक्षाप्यययोश्च विशयाः तासामर्धेष्टकामात्राणि पक्षयोर्भवन्ति । पञ्च पञ्च पुच्छपर्श्वयोर्दक्षिणा । उदीचीश्च १ पुच्छे प्रादेशमुपधाय सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् २ पञ्चदशभागीयाभिः संख्यां पूरयेत् ३ अपरस्मिन्प्रस्तारेऽध्यर्धा दश दक्षिणत उदीचीरात्मन्युपदधाति । दशोत्तरतो दक्षिणा । यथा प्रथमे प्रस्तारे पक्षौ तथा पुच्छम् । यथा पुच्छं तथा पक्षौ । विपरीता अप्यये ४ सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् ५ पञ्चदशभागीयाभिः संख्यां पूरयेत् । व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीषेत् ६ पञ्च चितयो भवन्ति । पञ्चभिः पुरीषैरभ्यूहतीति पुरीषान्ता चितिः अर्थान्तरत्वात्पुरीषस्य ७ जानुदघ्नं साहस्रं चिन्वीत प्रथमं चिन्वानः । नाभिदघ्नं द्विषाहस्रं द्वितीयमास्यदघ्नं त्रिषाहस्रं तृतीयमुत्तरमुत्तरं ज्यायांसम् । महान्तं बृहन्तमपरिमितं स्वर्गकामश्चिन्वीतेति विज्ञायते ८ द्विषाहस्रे द्विप्रस्ताराश्चितयो भवन्ति । त्रीषाहस्र त्रिप्रस्ताराश्चतुर्थप्रभृतिष्वाहारेषु नित्यमिष्टकापरिमाणम् ९ विज्ञायते च न ज्यायांसं चित्वा कनीयांसं चिन्वीतेति १० १०

चतुरश्राभिरग्निं चिनुत इति विज्ञायते । समचतुरश्रा अनुपपदत्वाच्छ-ब्दस्य १ पादमात्र्यो भवन्ति अरत्निमात्र्यो भवन्त्यूर्वस्थिमात्र्यो भवन्त्य-णूकमात्र्यो भवन्तीति विज्ञायते २ चतुर्भागीयमणूकम् । पञ्चम भागीयारत्निः । तथोर्वस्थि ३ पादेष्टका पादमात्री । तत्र यथाकामी शब्दार्थस्य विशयित्वात् ४ उपधानेऽष्टावष्टौ पादेष्टकाश्चतुर्भागीयानां पक्षाग्रयोर्निदध्यात् । सन्ध्योश्च तद्वदात्मानं षडङ्गुलावेताः । श्रोण्यंसेषु चाष्टौ प्राचीः प्रतीचीश्च ५ सन्ध्यन्तराले पञ्चभागीयास्सपादाः ६ पुच्छे प्रादेशमुपधाय सर्वमग्निं चतुर्भागीयाभिः प्रच्छादयेत् ७ पादेष्टकाभिः संख्यां पूरयेत् ८ अपरस्मिन्प्रस्तारे पुच्छाप्यये पञ्चमभागीया विशयाः । ता आत्मनि चतुर्दशभिः पादैर्यथायोगं उपदध्यात् ९ सर्वमग्निं पञ्च-मभागीयाभिः प्रच्छादयेत् १० पादेष्टकाभिः संख्यां पूरयेत् । व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् ११ ११

एकविधप्रभृतीनां करणीनां द्वादशेन त्रयोदशेनेतीष्टकाः कारयेत् । पादेष्टकाश्च । व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् १ एक-विधप्रभृतीनां प्रथमाहारेण द्वितीयेन तृतीयेनेति योयुज्येत । सर्वेषां यथा श्रुतिसंख्या तथोर्ध्वप्रमाणम् २ काम्या गुणविकाराः गुणशास्त्र-त्वात् ३ प्रउगं चिन्वीत भ्रातृव्यवानिति विज्ञायते ४ यावानग्निः सारत्निप्रादेशो द्विस्तावतीं भूमिं चतुरश्रां कृत्वा पूर्वस्याः करण्या अर्धाच्छ्रोणी प्रत्यालिखेत् । सा नित्या प्रउगम् ५ करणानि चयनमित्येकविधोक्तम् । प्रउगा इष्टकाः कारयेत् ६ उभयतः प्रउगं चिन्वीत यः कामयेत प्रजातान् भ्रतृव्यान्नुदेय प्रतिजनिष्यमाणानिति विज्ञायते ७ यथा विमुखे शकटे । तावदेव दीर्घचतुरश्रं विहृत्य पूर्वापरयोः करण्योरर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् । सा नित्योभ-यतः प्रउगम् । प्रउगचितोक्तम् ८ रथचक्रचितं चिन्वीत भ्रातृव्यवा-निति विज्ञायते ९ यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा तस्मिंश्चतुरश्रमवदध्याद्यावत्संभवेत् १० १२

तस्य करणया द्वादशेनेष्टकाः कारयेत् १ तासां षट्प्रधावुपधाय शेष-मष्टधा विभजेत् २ उपधाने चतुरश्रस्यावान्तरदेशान्प्रतिस्रक्तीस्संपा-दयेत् । मध्यानीतरस्मिन्प्रस्तारे । व्यत्यासं चिनुयाद्यावतः प्रस्ता-रांश्चिकीर्षेत् ३ द्रोणचितं चिन्वीतान्नकाम इति विज्ञायते ४ द्वयानि तु खलु द्रोणानि चतुरश्राणि परिमण्डलानि च ५ तत्र यथाकामी शब्दार्थ्यस्य विशयित्वात् ६ चतुरश्रं वा यस्य गुणशास्त्रम् । स चतुरश्रः ७ पश्चात्त्सरुर्भवत्यनुरूपत्वायेति विज्ञायते ८ सर्वस्या भूमेर्दशमं त्सरुः । तस्य पुच्छेन निर्हार उक्तः ९ तस्य करणया द्वाद-शेनेष्टकाः कारयेदध्यर्धाः पादेष्टकाश्च १० उपधानेऽध्यर्धाः पुरस्तात्प्र-तीचिरात्मन्युपदधाति । त्सर्वग्रे श्रोणयोश्च प्राचीः ११ सर्वमग्निं चतुर-श्राभिः प्रच्छादयेत् १२ पादेष्टकाभिः संख्यां पूरयेत् १३ अपरस्मि-न्प्रस्तारेऽध्यर्धा दक्षिणत उदीचीरात्मन्युपदधात्युत्तरतश्च दक्षिणाः । त्सरुपार्श्वयोर्दक्षिणा उदीचीश्च १४ सर्वमग्निं चतुरश्राभिः प्रच्छादयेत् १५ पादेष्टकाभिः संख्यां पूरयेत् । व्यत्यासं चिनुयाद्यावतः प्रस्ता-रांश्चिकीर्षेत् १६ १३

समूह्यं चिन्वीत पशुकाम इति विज्ञायते १ समूहन्निवेष्टका उपदधाति २ दिक्षु चात्वाला भवन्ति । तेभ्यः पुरीषमभ्युहतीति विज्ञायते ३ परिचाय्यं चिन्वीत ग्रामकाम इति विज्ञायते ४ मध्यमां स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति । स परिचाय्यः ५ उपचाय्यं चिन्वीत ग्रामकाम इति विज्ञायते । परिचाय्येनोक्तः ६ श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति विज्ञायते ७ द्वयानि तु खलु श्मशानानि चतुरश्राणि परिमण्डलानि च ८ तत्र यथाकामी शब्दार्थस्य विशयित्वात् ९ चतुरश्रं वा यस्य गुणशास्त्रम् । स चतुरश्रः । त्सरुवर्जं द्रोणचितोक्तः १० छन्दश्चितं चिन्वीत पशुकाम इति विज्ञायते ११ सर्वैश्छन्दोभिश्चिनुयादित्येकम् । प्राकृतैरित्यपरम् १२ १४

श्येनचितं चिन्वीत सुवर्गकाम इति विज्ञायते १ वक्रपक्षो व्यस्तपुच्छो भवति । पश्चात्प्राङुदूहति । पुरस्तात्प्रत्यङुदूहति । एवमिव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते २ यावानग्निः सारत्निप्रादेशः सप्तविधः संपद्यते । प्रादेशं चतुर्थमात्मनश्चतुर्भागीयाश्चाष्टौ । तासां तिस्रः शिरः । इतरत्पक्षयोर्विभजेत् ३ पञ्चारत्निः पुरुषः । चतुररत्निर्व्यायामः । चतुर्विंशत्यङ्गुलयोऽरत्निः । तदर्धं प्रादेश इति क्लृप्तिः ४ अर्धदशमा अरत्नयोऽङ्गुलयश्च चतुर्भागोन पक्षायामः ५ द्विपुरुषां रज्जुमुभयतः पाशं करोति मध्ये लक्षणम् । पक्षस्यापरयोः कोटयोरन्तौ नियम्य लक्षणेन प्राचीनमायच्छेदेवं पुरस्तात् । स निर्णामः । एतेनोत्तरः पक्षो । व्याख्यातः ६ आत्मा द्विपुरुषायामोऽध्यर्धपुरुषव्यासः ७ पुच्छेऽर्धपुरुषव्यासं पुरुषं प्रतीचीनमायच्छेत् । तस्य दक्षिणतोऽन्यमुत्तरतश्च । तावत्करणया व्यवलिखेत् । यथाऽर्धपुरुषोऽप्ययेस्यात् ८ शिरस्यर्धपुरुषेण चतुरश्रं कृत्वा पूर्वस्याः करणया अर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् ९ १५

अप्ययान् प्रति श्रोणयंसानपच्छिन्द्यात् । एवमिव हि श्येनः १ करणं पुरुषस्य पञ्चमायामं षष्ठव्यासं कारयेद्यथायोगनतं तत्प्रथमम् २ ते द्वे प्राची संहिते । तद्द्वितीयम् ३ प्रथमस्य षड्भागमष्टम भागेन वर्धयेत् । यथायोगनतं तत्तृतीयम् ४ चतुर्भागीयाऽध्यर्धा । तस्याश्चतुर्भागीयामात्रमक्ष्णया भिन्द्यात् । तच्चतुर्थम् ५ चतुर्भागीयार्धं पञ्चमम् ६ तस्याक्ष्णया भेदः षष्ठम् ७ पुरुषस्य पञ्चमभागं दशभागव्यासं प्रतीचीनमायच्छेत् । तस्य दक्षिणतोऽन्यमुत्तरतश्च । तावक्ष्णया दक्षिणापरयोः कोटयोरालिखेत् । तत्सप्तमम् ८ एवमन्यत् । उत्तरं तूत्तरस्याः कोटयालिखेत् तदष्टमम् ९ चतुर्भागीयाक्ष्णयोभयतो भेदो नवमम् १० उपधाने षष्टिः षष्टिः पक्षयोः प्रथमा उदीचीरुपदध्यात् ११ पुच्छपार्श्वयोरष्टावष्टौ षष्ठ्ययस्तिस्रोऽग्रे तत एकां ततस्तिस्रः तत एकाम् १२ पुच्छाप्यये चतुर्थ्यौ विशये । तयोश्च पश्चात्पञ्चम्यावनीकसंहीते १३ १६

शेषे दश चतुर्थ्यः श्रोण्यंसेषु चाष्टौ प्राचीः प्रतीचीश्च १ शेषे च षड्विंशतिरष्टौ षष्ठ्यश्चतस्रः पञ्चम्यः २ शिरसि चतुर्थ्यौ विशये । तयोश्च पुरस्तात्प्राच्यौ ३ एष द्विशतः प्रस्तारः ४ अपरस्मिन्प्रस्तारे पञ्च पञ्च निर्णामयोर्द्वितीयाः । अप्यययोश्च तृतीया आत्मानमष्टभागावेताः । शेषे पञ्चचत्वारिंशत्प्रथमाः प्राचीः ५ पुच्छपार्श्वयोः पञ्च पञ्च सप्तम्यः । द्वितीयचतुर्थ्योश्चान्यतरतः प्रतिसंहितामेकैकाम् । शेषे त्रयोदशाष्टम्यः ६ श्रोण्यंसेषु चाष्टौ चतुर्थ्यो दक्षिणा उदीचीश्च । शेषे च विंशतिस्त्रिंशत् षष्ठ्य एकं पञ्चमीम् ७ शिरसि चतुर्थ्यौ तयोश्च पुरस्ताच्चतस्रो नवम्यः ८ एष द्विशतप्रस्तारः ९ व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् १० १७

श्येनचितं चिन्वीत सुवर्गकाम इति विज्ञायते १ वक्रपक्षो व्यस्तपुच्छो भवति । पश्चात्प्राङुदूहति । पुरस्तात्प्रत्यङुदूहति । एवमिवहि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते २ पुरुषस्य षोडशीभिर्विंशशतं सारत्निप्रादेशः सप्तविधः संपद्यते । तासां चत्वारिंशदात्मनि तिस्रः शिरसि पञ्चदश पुच्छे एकत्रिंशद्दक्षिणे पक्षे तथोत्तरे ३ अध्यर्धपुरुषस्तिर्यग्द्वावायामत इति दीर्घ चतुरश्रं विहृत्य श्रोण्यंसेभ्यो द्वे द्वे षोडश्यौ निरस्येत् । चत्वारिंशत्परिशिष्यन्ते । स आत्मा ४ शिरस्यर्धपुरुषेण चतुरश्रं कृत्वा पूर्वस्याः करण्या अर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् । तिस्रः परिशिष्यन्ते तच्छिरः ५ पुरुषस्तिर्यग्द्वावायामतः षोडशभागश्च दक्षिणः पक्षः । तथोत्तरः ६ पक्षाग्रे पुरुषचतुर्थेन चत्वारि चतुरश्राणि कृत्वा तान्यक्ष्णया व्यवलिख्यार्धानि निरस्येत् । एकत्रिंशत्परिशिष्यन्ते ७ पक्षाग्रमुत्सृज्य मध्ये पक्षस्य प्राचीं लेखामालिखेत् । पक्षाप्यये पुरुषं नियम्य पुरुषान्ते नितोदं कुर्यात् । नितोदात्प्राचीनं पुरुषान्ते नितोदं नितोदयोर्नानान्तावालिखेत् । तत्पक्षनमनम् । एतेनोत्तरः पक्षो व्याख्यातः ८ १८

द्विपुरुषं पश्चादर्धपुरुषं पुरस्ताच्चतुर्भागोनः ह्पुरुष आयामोऽष्टादशकरण्यौ पार्श्वयोस्ताःह् पञ्चदश परिगृह्णन्ति । तत्पुच्छम् १ षोडशीं चतुर्भिः परिगृह्णीयात् । अष्टमेन त्रिभिरष्टमैश्चतुर्थेन चतुर्थसविशेषेणेति २ अर्धेष्टकां त्रिभिर्द्वाभ्यां चतुर्थाभ्यां चतुर्थसविशेषेणेति ३ पादेष्टकां त्रिभिश्चतुर्थैनैकं चतुर्थसविशेषार्धाभ्यां चेति ४ पक्षेष्टकां चतुर्भिर्द्वाभ्यां चतुर्थाभ्यां सप्तमाभ्यां चेति ५ पक्षमध्यीयां चतुर्भिर्द्वाभ्यां चतुर्थाभ्यां द्विसप्तमाभ्यां चेति ६ पक्षाग्रीयां त्रिभिश्चतुर्थैनैकं चतुर्थसप्तमाभ्यामेकं चतुर्थसविशेषसप्तमाभ्यां चेति ७ पक्षकरण्याः सप्तमं तिर्यङ्मानी पुरुषचतुर्थं च पार्श्वमानी । तस्याक्ष्णयारज्ज्वा करणं प्रजृम्भयेत् । पक्षनमन्याः सप्तमेन फलकानि नमयेत् ८ उपधाने चतस्रः पादेष्टकाः पुरस्ताच्छिरसि । अपरेण शिरसोऽप्ययं पञ्च । पूर्वेण पक्षाप्ययावेकादश । अपरेणैकादश पूर्वेण पुच्छाप्ययं पञ्चापरेण पञ्च पञ्चदश पुच्छाग्रे ९
१९

चतस्रश्चतस्रः पक्षाग्रीयाः पक्षाग्रयोः पक्षाप्यययोश्च विशयाः १ ता आत्मनि चतसृभिश्चतसृभिः षोडशीभिर्यथायोगं पर्युपदध्यात् २ चतस्रश्चतस्रः पक्षमध्यीयाः पक्ष मध्ययोः । पक्षेष्टकाभिः प्राचीभिः पक्षौ प्रच्छादयेत् ३ अवशिष्टं षोडशीभिः प्रच्छादयेत् । अन्त्या बाह्यविशेषा अन्यत्र शिरसः ४ अपरस्मिन्प्रस्तारे पुरस्ताच्छिरसि द्वे षोडश्यौ बाह्यविशेषे उपदध्यात् । तेऽपरेण द्वे विशये अभ्यन्तरविशेषे ५ द्वाभ्यामर्धेष्टकाभ्यां यथायोगं पर्युपदध्यात् । बाह्यविशेषाभ्यां परिगृह्णीयात् ६ आत्म करणीनां सन्धिषु षोडश्यो बाह्यविशेषा उपदध्यात् ७ चतस्रश्चतस्रोऽर्धेष्टकाः पक्षाग्रयोः । पक्षेष्टकाभिरुदीचीभिः पक्षौ प्रच्छादयेत् ८ तिस्रस्तिस्रोऽर्धेष्टकाः पुच्छपार्श्वयोः ९ अवशिष्टं षोडशीभिः प्रच्छादयेत् । अन्त्या बाह्यविशेषा अन्यत्र पुच्छात् १० यच्चतुरश्रं त्र्यश्रं वा संपद्येतार्धेष्टकाभिः पादेष्टकाभिर्वा प्रच्छादयेत् । अणुकाः पञ्चदशभागीयानां स्थाने ११ व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् १२
२०

कङ्कचिदलजचिदिति श्येनचिता व्याख्यातौ १ एवमिव हि श्येनस्य वर्षीयांसौ पक्षौ पुच्छाद्वक्रौ संनतं पुच्छं दीर्घ आत्माऽमण्डलः शिरश्च । तस्माच्छ्रुतिसामर्थ्यात् । अशिरस्को वाऽनाम्नानात् २ विज्ञायते च । कङ्कचितं शीर्षण्वन्तं चिन्वीत यः कामयेत सशीर्षोऽमुष्मिं-ल्लोके संभवेयमिति विद्यमाने कथं ब्रूयात् ३ प्राकृतौ वक्रौ पक्षौ संनतं पुच्छं विकारश्रवणाद्यथाप्रकृत्यात्माऽविकारात् ४ यथो एत-च्छ्येनचितं चिन्वीतेति यावदाम्नातं सारूप्यं तद्व्याख्यातम् ५ त्रिस्तावोऽग्निर्भवतीत्यश्वमेधे विज्ञायते ६ तत्र सर्वाभ्यासोऽविशेषात् ७ दीर्घचतुरश्राणां समासेन पक्षपुच्छानां समास उक्तः ८ एकविं-शोऽग्निर्भवतीत्यश्वमेधे विज्ञायते ९ तत्र पुरुषाभ्यासो नारत्निप्रादेशानां संख्यासंयोगात् संख्यासंयोगात् १० २१

इत्यापस्तम्बशुल्बसूत्र